सा प्रकृतिः । यत्तद्धर्म्मान्तरं स विकार इति सेयं प्रकृतार्थविपर्यया-दनियमात् कथां प्रसञ्जयति । प्रतिज्ञातश्चानेन नासदाविर्भवति[5] न सत्तिरोभवतीति सदसदतोश्च तिरोभावाविर्भावावन्तरेण न कस्यचित्प्र-वृत्त्युपरमः प्रवृत्तिर्वेत्येवं प्रत्यवस्थिते यदि सत आत्महानमसत-श्चात्मलाभ[6]मभ्युपैत्यपसिद्धान्तो भवति । अथ नाभ्युपैति पक्षोऽस्य न सिध्यतीति । इहापि न कश्चिदनियमात्कथाप्रसङ्गः । यत्तेनोपगतन्नास-दुत्पद्यते न सद्विनश्यतीति तस्य समर्थ[7]नापदमुक्तमेकप्रकृतिकमिदं व्यक्तमनुपदर्शनादिति । तत्रैका प्रकृतिः सुखदुःखमोहस्तदविभक्तयो-

---

(1) प्रतिज्ञातं खल्वनेनेति (19b5) पूर्वोक्तं स्मर[5]यति । यद्येवङ्को दोष इत्याह । सदसतोरित्यादि । सतस्तिरोभावमेकान्तेन विनाशमन्तरेण न कस्यचिद्धर्मस्य प्रवृत्त्युपरमः सिध्यति । केन चिद्रिरूपे[6]णावस्थाने सति स तिरोहितोऽङ्गस्तस्या-वस्थितस्यात्मभूतः परभूतो वा भवेत् । आत्मभूतत्वे तिरोहितादव्यतिरेकात् तिरोहितवदवस्थितस्याप्यनवस्थानं[7] अवस्थितवच्च तदव्यतिरेकतस्तिरोहितस्या-प्यवस्थानमासं[?शं]क्यते । परभूतत्वेपि कथमनन्वयो न विनाशो न ह्यन्यस्या-वस्थानेऽन्यदवतिष्ठते । अन्यो वान्यस्यान्वयश्चैतन्यस्याऽ[8]पि घटान्वयप्रसङ्गात् । तथा नासत आविर्भावमुत्पादमन्तरेण कस्यचिद्धर्मस्य प्रवृत्तिर्वा सिध्यति ।

ननु च विद्यमानमेव धर्मान्तरमाविर्भाव्यते । ग्रहणविषयभा[9]वमापाद्यते । 82b न विद्यमानस्य क्रियास्त्युपादानमिति उपलब्धिर्वा विद्यमानत्वात् । न कारक-जन्यत्वमित्येवं प्रत्यवस्थितः प्रतिषिद्धः साङ्ख्यः । क्वचित् सप्तम्यापद्यते । तत्र प्रत्य[1]वस्थिते प्रतिवादिनि सतीति व्याख्येयं । यदि स कापिलः सतो धर्मस्यात्म-हानमसतश्चात्मलाभमभ्युपैति तदानीमपसिद्धान्तो भवति । अभ्युपगमविरुद्धस्य प्रतिज्ञा[2]नादपसिद्धान्तसंज्ञकं निग्रहस्थानमस्य भवतीत्यर्थः । अथ सत आत्म-हानमसतश्चात्मलाभन्नाभ्युपैति । एवमप्येकप्रकृतिर्विकाराणामिति योयं पक्षः पूर्व्वप्रतिज्ञातः सोस्य[3]न सिध्यति प्रकृतिविकारलक्षणस्यानवस्थितत्वात् । तथा हि तयोर्लक्षणं यस्यावस्थितस्येत्यादिनोक्तं । तस्य चायोगः । सदसतोश्चे (19b6) त्याविना प्रतिपा(ि)वत इत्येतावा[4]न्परग्रन्थः । अत्र सम्प्रत्याचार्यः प्रतिविधत्ते । इतोपि प्रतिविदध्महे इति शेषः । न कश्चिदनियमात् सिद्धान्तनीतिविरोधात् साङ्ख्यस्य प्रसङ्गः । तस्माद्यत्तेनोपग[5]तं नासदुत्पद्यते न स(त्)तिरोभवतीति तस्य समर्थनायैवमुक्तं । किमुक्तमित्याह (1) एकप्रकृतिकमिदं व्यक्तमन्वय-दर्शनादिति (19b8) । तत्रैकेत्येतदेव विभजति । तदवि[6]भक्तयोनिकमिदं

निकमिदं व्यक्तं तदन्वयदर्शनात्। व्यक्तस्य तत्स्वभावताऽभेदोप[8]लब्धि-रिति। सुखादीनामुत्पत्तिविनाशाभ्युपगमाभावात् सर्वस्य तदात्मकस्य नोत्पत्तिविनाशाविति सिद्धं भवति। अत्र तदुक्तस्य हेतोर्दोषमनुभाव्य 20a विकारप्रकृतिलक्षणं[9] पृच्छन् स्वयमयं प्रकृता (?) सत्त्वेनानियमात् कथां प्रवर्त्तयति। तत्रेदं स्याद्वाच्यं व्यक्तं नाम प्रवृत्तिनिवृत्तिधर्म्मकं न तथा सुखादयः। व्यक्तस्य सुखाद्यन्वये सुखादिस्वभावता प्रवृत्तिनि[1]-वृत्तिधर्म्मतालक्षणमवहीय(ते) इति। न तद्धितसुखादिस्वभावता-व्यक्तलक्षणविरोधादिति। सुखाद्यन्वयदर्शनादित्यसिद्धो हेतुरिति। एवं हि

---

व्यक्तं। ते सुखादयोऽविभक्ताः अपृथग्भूता योनिः स्थानमधिकरणं यस्य व्यक्तस्य तत्तदविभक्तयोनिकं किङ्कारणं तदन्वयदर्शनात्। तैः(:) सुखादिभि-[7]रन्वयदर्शनात् तादात्म्योपलम्भात्। ततः किं सिद्धमित्याह व्यक्तस्य तत्स्वभावता सुखादिस्वभावता। तत्र स्वभावतैव कथन्निश्चितेत्याह। अभेदोपलब्धे (19b8)रिति। सुखादिभिः[8] शब्दादीनामनानात्वदर्शनादिति यावत्। एवमपि किं सिद्धम्भवतीत्याह। सर्व्वस्य (19b9) शब्दादेर्विकारग्रामस्य सुखाद्या-83a त्मकस्य नोत्पत्तिविनाशाविति सम्भवति। कस्मादि[9]त्याह (।) सुखादीनामुत्पत्ति-विनाशाभावात्। सुखाद्यव्यतिरेकात्तदात्मवच्छब्दादयोपि नित्याः सिद्धा भवन्ति। तथा च यत्पूर्व्वमभ्युपगतं न श(?स)तो विनाशो नासदुत्पद्यत इति। तत्समर्थितं भवति। अत्रैवं कापिलेन स्वोपगमे समर्थिते सति तदुक्तस्य तेन साङ्ख्येनोक्तस्य हेतोरन्वयदर्शनस्य दोषमसिद्धतादिकमनुद्भाव्य स एवमुक्तवान् पर्यनुमुज्यते। अथ प्र[10]कृतिर्निर्विकार इति कथं लक्षयितव्यमित्येवं विकारप्रकृत्योर्लक्षणं पृच्छन् स्वयमयमक्षपादः प्रकृतासम्बन्धेनानियमात् प्रकृतार्थोपरोधात् कथाम्प्रवर्त्त[3]यति। यस्मात् प्रकृतिविकारयोरिह लक्षणं न प्रकृतमेव तत्किन्तदभिधाय पर्यनुयुज्यते तस्मादप्रस्तुतपर्यनुयोक्तृत्वादक्षपाद एव निग्रहार्ह इति[4] भावः। किन्तर्ह्यत्रोत्तरसम्बद्ध वाक्यमित्याह(।)तत्रान्वयदर्शनहेताविदं स्याद् वाच्यं (20a1)। व्यक्तन्नाम प्रवृत्ति-निवृत्तिधर्मकं न तथा व्यक्तवत् सुखादयः प्रवृत्तिनि[5]वृत्तिधर्मका इति लिङ्गवचन-परिणामेन सम्बन्धः। तथा च व्यक्तस्य सुखाद्यन्वयेऽस्य व्याख्यानं सुखादिस्वभावतायां सत्यां प्रवृत्तिनिवृत्तिधर्मतालक्ष[6]णं व्यक्तस्यावहीयते। तदव्यतिरेकेण तेषा-मपि सदावस्थानात्। इति तस्मान्न तद्रहितसुखादिस्वभावता व्यक्तस्य। ताभ्या-म्प्रवृत्तिनिवृत्तिभ्यां रहितास्तथोक्तास्ते च सु[7]खादयश्च। ते स्वभावो यस्य तस्य भावस्तद्रहितसुखादिस्वभावता। कस्मादित्याह (।) व्यक्तलक्षणविरोधादि(20a2)-

तस्य साधनदोषोद्भावनेन पक्षो दू[2]षितो भवति । सोऽनुपसंहृत्य साधनदोषकथां प्रतारयन् स्वदोषं परत्रोपक्षिपति । अयमेव दोषोऽनेन प्रकारेणोच्यत इति चेत् । एष नैमित्त [ ? त्ति ]कानां विषयो न लोकः[3] शब्दैरप्रतिपादितमर्थं प्रतिपत्तुं समर्थ इति । स एवायं भण्डालेख्यधि- [ ? भण्डालेख्य ] न्यायः । अत्रापि यथोक्तेन न्यायेन पूर्वकस्यासाधनाङ्ग-

---

ति व्यक्तस्य लक्षणं प्रवृत्तिनिवृत्तिधर्मकत्वं तस्य तद्विपरीतः ।[8] सुखादिभिः परस्पर-परिहारस्थितिलक्षणो विरोधः । तथा च साधनस्र सवावस्थितरूपसुखादिस्वभाव-मिदं ते व्यक्तं प्राप्नोति तद्विपरीतधर्मत्वात् । क्षेत्रज्ञवत्[9] न च सुखादिव्यक्तयोरेक- 83b स्वभावता । परस्परविरुद्धधर्माध्यासितत्वात् । सत्त्वरजस्तमसामिव चैतन्यानामिव वा । एवञ्च व्यक्तस्य सुखादिस्वभावतायोगे सुखाद्यन्वयदर्शन[1]सिद्धो हेतुः । कस्मा-दिदं सम्बद्धं दूषणमित्याह । एवं हि तस्य साङ्ख्यस्य साधनदोषोद्भावनेन हेत्वसि-द्धताचोदनेनैकप्रकृतीदं व्यक्तमित्ययं पक्षो दूषितो भवति (2023) । स पु[2]नर्नैयायिकः साधने दोषमसिद्धताख्यमनुपसंहृत्यापदर्श्य अप्रकृतप्रकृतिविकारलक्षणपर्यनुयोगेन कथां प्रतानयत्यविमुञ्चं स्वदोषमन्यमात्कथा[3]प्रसङ्गं परत्र साङ्ख्ये तपस्विन्यु-पक्षिपति । पर आहायमेवासिद्धताख्यो दोषोनेन प्रकारेण प्रकृतिविकारलक्षण-पर्यनुयोगद्वारेणास्माभिरप्युच्य[4]त इति । आचार्य आह । एष नैमित्तिकानां (2023) ज्योतिर्ज्ञानविदां विषयः । नायं त्वदुक्तस्य वाक्यस्यार्थ इति यावत् । यतो न लोकः शब्दैरप्रतिपादितमर्थं प्रति[5]पत्तुं समर्थः अर्थप्रकरणादिभिर्विनेत्यध्याहारः । तस्मात् स एवायं (2024) प्रतिज्ञाविरोधप्रस्तावे निर्दिष्टो भण्डालेख्यन्यायोत्राप्यपसिद्धान्तो न केवलं तत्रेत्यऽ[6]पि शब्दः । यथा हि भण्डाः प्राकृतान् विस्मापयन्तः शीघ्रमर्द्धचन्द्रा-कारामल्पीयसीं रेखामालिख्य भणन्ति पश्यत तालमात्रेण हस्ती विलिखितोस्माभि-रिति तत्र केचि[7]त् मन्दमतयस्तथैव प्रतिपद्यन्ते । केचिद् दुर्विदग्धधियः पर्यनुयुञ्जते । ननु नोस्य कर्णपाददन्तादयः प्रतीयन्ते तत्कथमयन्तद्विकलो हस्ती भवतीति । ते पु नराहु[8]ः । सत्यं न प्रतीयन्ते । अस्माभिस्तु समाप्तसकलकलः करेणुरयं लिखितः । तास्तस्य सकलाः कलाः सलिल इव मग्नत्वान्नोपलभ[? भ्य]न्ते कुम्भकदेशमात्र-न्त्विदमस्योप[9]लभ्यत इति तथाजातीयकमेतत् परस्यापि धाष्टर्चविजृम्भितं । यदि 84a नाम नायमर्थोस्माद् बाह्यात् प्रतीयते तथाप्यनेन प्रकारेणोच्यत इति । अपि चोच्य-ताम[1]यमेवार्थोनेन प्रकारेण तथाप्यसिद्धस्य हेत्वाभासेष्वन्तर्भावात् तद्वचनेनैवा-भिधानमिति नापसिद्धान्तः पथगुपादेयो भवेदित्येतदुपसंहारव्याजेनाह । यथो[2]क्तेन न्यायेने (2024) त्यादि ॥०॥

स्यासिद्धस्य हेतोरभिधाना[4]देव निग्रहो नापि नियमात्कथाप्रसङ्गादिति। इदमपि हेत्वाभासेष्वन्तर्भावान्न पृथग्वाच्यं ॥ त् ॥

*हेत्वाभासाश्च यथोक्ताः* (न्या० ५।२।२४)। हेत्वाभासाश्च निग्रहस्थानानि[5] किम्पुनर्लक्षणान्तरयोगाद्धेत्वाभासा निग्रहस्थानभावमापद्यन्ते। यथा प्रमाणानि प्रमेयत्वमित्यत आह। यथोक्तहेत्वाभासलक्षणेनैव निग्रहस्थानता[6] च इति। अत्रापि यथोक्तत्वादिद (?) मेव किन्ते यथालक्षितप्रभे-

---

हेत्वाभासाश्च यथोक्ता इति सूत्रं। इदमाक्षेपपूर्वकं वात्स्यायनो व्याचष्टे। किं पुनरिति (202a6) हेत्वाभासलक्षणाद्यदन्यल्लक्षणं तेन सम्बन्धा[3]न्निग्रहस्थानत्वमापद्यन्ते। किमिवेत्याह। यथा प्रमाणानि प्रमेयत्वं लक्षणान्तरवसा [?वसा]दापद्यन्त (202a6) इति वर्त्तते तानि हि प्रमिति क्रियाया(:) कारणत्वात्। प्रमा[4]णानि प्रमाणान्तरेण तु यदा प्रमीयन्ते तदा कर्मत्वात् प्रमेयानि। तत एव पदार्थत्वात् प्राप्तः संशयः। अत्राह मुनिना यथोक्त इति। अस्यैव विवरणं।[5] यथोक्तहेत्वाभासलक्षणेनैव निग्रहस्थानभाव इति। इदमुक्तम्भवति। सव्यभिचारविरुद्धप्रकरणस(म)साध्यसमातीतकाला (न्या० सू० १।२।४) इति हेत्वाभासा इति प्र°भेदमुपक्रम्य यत्प्रत्येकं लक्षणमुक्तं। अनैकान्तिकः सव्यभिचारः (न्या० सू० १।२।५) सिद्धान्तमभ्युपेत्य तद्विरोधाद्विरुद्धं (न्या० सू० १।२।६)। यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः (न्या० सू० १।२।७) साध्याविशिष्टः साध्यत्वात् साध्यसमः (न्या० सू० १।२।८) कालात्ययापदिष्टः कालातीत (न्या० सू० १।२।९) इति तेनैव लक्षणेनैषान्निग्रहस्थानत्वं न पुनस्तत लक्षणान्तरमपेक्ष्यत इति। अत्रापी[8](202a7)त्याचार्यः। कथञ्चिन्त्यमित्याह। किन्ते यथा भवद्भिर्लक्षितप्रभेदास्तथैव ते भवन्त्याहोस्विदन्यथेति (202a7)। लक्षितः प्रभेदो येषामिति विग्रहः। तर्त्तहि किन्त(द्)

84b चिन्त्यत इत्याह[9] तत्तु चिन्त्यमानमिहातिप्रसज्यत इति न प्रतन्यते। इदमेवागूरितं। विदन्त्येव केचिदत्र हेत्वाभासा एव न युज्यंते केचित्तु हेत्वाभासा अपि न सङ्ग्रहीता इत्यस्मिंश्च विचारे हेत्वाभास[1]वार्त्तिकं सकलमवतारयितव्यमिति शास्त्रान्तरमेव भवेत्। अवदातमतयस्त्वस्मद्विहितहेत्वाभासलक्षणविपर्ययेण दूरान्तरत्वात्तद्दैसर्शं(?)। तस्मादुपेक्षै[2]व युज्यत इति। तथापि मन्दमतिविबोधनायापि शास्त्रमुच्यत इति। कालातीतप्रकरणसमयोस्तावद्धेत्वाभासत्वं यथा नोपपद्यते तथा वर्ण्यते। तत्र कालात्ययापदि[3]ष्टः कलातीतः तदिह (।) वृद्धनैयायिकानामपास्य मतमाचार्यदिङ्नागपादैर्भाषितत्वादिदानीन्तना वात्स्यायनादयोमुमेव स्यिपक्षमाहुः। तत्रैवम्ब्रूमः।[4] कालात्ययेन युक्तो यस्यार्थैकदेशोऽपदिश्यमानस्य स कालात्ययापदिष्टः

कालातीत इत्युच्यते। निदर्शनं (।) नित्यः शब्दः संयोगव्यंग्यत्वाद्रूपवत्। प्रागूर्ध्वं[5] च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते। तथा शब्दो व्यवस्थितो भेरीकर्ण्णसंयोगेन दारुपर्णयोगेन वा व्यज्यते। तस्मात्संयोगव्यंग्यत्वान्नित्यः[6] शब्द इति। अयमहेतुः कालात्ययापदेशात् व्यंजकस्य संयोगस्य कालं न व्यंग्यस्य रूपस्य व्यक्तिरत्येति सति प्रदीपसंयोगे रूपस्य ग्रहणं भवति। न निवृत्तसंयोगे[7] रूपङ्गृह्यते। निवृत्ते तु दारुपर्णसंयोगे दूरस्थेन शब्दः श्रूयते विभागकाले नेयं शब्दस्य व्यक्तिः संयोगकालमत्येतीति संयोगनिमित्ता भवति। कारणाभावाद्धि कार्या[8]भाव इति। नन्वयमनैकान्तिक एव। संयोगव्यंग्यत्वादिति। अनित्यमपि संयोगेन व्यज्यमानं दृष्टं यथा घट इति। न। संयोग व्यंग्यत्वेनावस्थानस्य साध्यत्वान्न ब्रूमो[9] नित्यः शब्द इति। अपि त्ववतिष्ठते शब्द इत्ययं प्रतिज्ञार्थस्तदा च संयोगव्यंग्यत्वादित्ययं हेतुरनैकान्तिको न ह्यनवस्थितं किञ्चित्संयोगेनाभिव्यज्यमान(:) कथमिति[1] तदनेन प्रकारेण संयोगव्यङ्ग्यत्वमेव शब्दस्य प्रतिषिद्ध्यत इति नायमसिद्धाद् व्यावर्तते। अन्यथानेयं शब्दस्य व्यक्तिः संयोगिकालमत्येतीति न संयोगनिमित्ता[2] भवतीति। वचनस्य कोर्थ इति वक्तव्यं। स्याद् बुद्धिः सर्वदार्धमिण्यविद्यमानस्यासिद्धत्वं। अयन्तु न सर्वथा धर्मिण्यसिद्धो येनोत्पत्तिकाले संयोगव्यङ्ग्यत्वमस्ति। न[3] तूपलब्धिकाल इति। तदुक्तं। एकदेशासिद्धस्यापि असिद्धत्त्वपरिज्ञानात्। यथा नित्याः परमाणवो गन्धवत्वात्। श्चेतनाश्च तरवः स्वापादिति। यश्चा[4]नित्यः शब्द इति प्रतिजानीते स कुठारदारुसंयोगादेः शब्दस्योत्पत्तिमेव प्रतिपद्यते। न पुनरवस्थितस्याभिव्यक्तिमिति व्यक्तमस्यान्यतरासिद्ध[5]त्वं। अथ संयोगे सत्युपलब्धेरिति हेत्वर्थाभ्युपगमान् नायमसिद्धो हेतुरिति समाधीयते। तथापि तैलतेजोवर्त्तिसंयोगे कुलालमृत्पिण्डदण्डसं[6]योगे च सति दीपघटादयः समुपलभ्यन्ते। न च तेषान्तत्र संयोगाप्राप्त्यवस्थानमित्यनेनानैकान्तिक एव प्राप्नोतीति न कालातीतः। तदुत्तरकालमप्यवस्थाने साध्ये[7] समुदायान्तरव्यय(?)वादिनो विरुद्धः। सपक्षाभावादेव तत्र वृत्तेरभावात्। क्षणस्थितिधर्मवति च धर्मिणि। रूपादिके विद्यमानत्वात्। स्थिरभाववादिनन्तु प्रति[8]प्रतिबन्धवैकल्यं साधनवैफल्यञ्च। अनङ्गीकृतसिद्धान्ते तु न्यायवादिनि प्रतिवादिनि पूर्वपक्षप्रतिपादितो दोष इति। एवमुदाहरणान्त[9]रेपि दूषणमुत्प्रेक्ष्य वक्तव्यमिति ॥०॥

यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः। (न्या० सू० १।२।७) विमर्शाधिष्ठानौ पक्षप्रतिपक्षावनवसितौ प्रकरणन्तस्य चिन्तामर्विमर्शात् प्रभृति प्राङ्निर्णयात् परीक्षणं सा यत्र कृता स निर्ण्णयार्थं प्रयुक्तोभयपक्षसाम्यात् प्रकरण[2]-मनतिवर्त्तमानः प्रकरणसमो न निर्ण्णयाय कल्प्यते। कस्मात्पुनः प्रकरणचिन्ता तत्वानुपलब्धेः। यस्मादुपलब्धे तत्वेर्थे निवर्त्तते चिन्ता तस्मात्सामान्येनाधिग[3]तस्य या

विशेषतोऽनुपलब्धिः सा प्रकरणचिन्तां प्रयोजयतीति। उदाहरणमनित्यः शब्दो नित्यधर्मानुपलब्धेः। अनुपलभ्यमाननित्यधर्मकमनित्यन्दृ[4]ष्टं स्थाल्यादि। यत्र समानो धर्मः संशयकारणहेतुत्वेनोपादीयते संशयसमः सव्यभिचार एव। या तु विमर्शस्य विशेषापेक्षतोभयपक्षविशेषानु[5]पलब्धौ सा प्रकरणम्प्रवर्तयति। यथा च शब्दे नित्यधर्मो नोपलभ्यते तथानित्यधर्मोपि। सेयमुभयपक्षविशेषानुपलब्धिः प्रकरणचिन्ताम्प्रयो[6]जयति कथम्विपर्यये प्रकरणनिवृत्तेः। यदि नित्यधर्मः शब्दे गृह्येत न स्यात्प्रकरणं। यदि (न) नित्यधर्मो गृह्येत एवमपि निवर्त्तते प्रकरणं। सोयं हेतु[7]रुभौ पक्षौ प्रवर्त्तयन्नान्यतरस्य निर्णयाय कल्प्यत इति। न त्वयं साध्याविशिष्ट एव। नाविशिष्टः। तस्यैव प्रकरणप्रवृत्तिहेतोर्द्धर्मस्य हेतुत्वेनोपादानात्। यत्र[8] साध्येन समानो धर्मो हेतुत्वेनोपादीयते स साध्याविशिष्टः। यत्र पुनः प्रकरण-

86a प्रवृत्तिहेतुरेव स प्रकरणसम इति। अत्रापि नित्यानित्यधर्मानुपलम्भद्व[9]यादेव प्रकरणचिन्ता। न त्वेकस्मात्। विपर्यये प्रकरणनिवृत्तिरिति वचनात्। तद्यदि नित्यानित्यधर्मानुपलब्धेरिति हेतुः स्यात्। स्यात् प्रकरणसमः। तदेकधर्मानु[1]पलब्धेस्तूपादाने कथं प्रकरणसम इत्यभिधानीयं। उभयधर्मानुपलम्भोपादानेपि सपक्षविपक्षयोरनुवृत्तिव्यावृत्योरनिश्चयादसाधरणानैकान्तिको[2] भवतीति कथमस्य हेत्वा(भा)सान्तरत्वं। भवतु नामैकधर्मानुपलब्धिरेव हेतुः प्रकरणसमः। तथापि नित्यशब्दवाद्यवश्यमेव व्यामोहान्नित्यधर्मान् प्रतिपद्यत[3] इति प्रतिवाद्यसिद्धोयं भवति। अथ प्रमाणेन नित्यधर्म्मप्रतिक्षेपान्नित्यधर्मानुपलब्धिः प्रतिपाद्यते। तदापि निश्चायकत्वात् सम्यग्ज्ञानहेतुरेवायं[4] इति कथं हेत्वाभासः प्रकरणसमः। तदा हि विशेषोपलब्धिरेव हेत्वर्थो व्यवतिष्ठते। विशेषाश्च नित्यस्य कृतकत्वादयः। न च तत्कृता प्रकरणचिन्ता[5] विपर्यये प्रकरणनिवृत्तेरिति वचनात्। अपि च नित्यधर्मानुपलब्धेरिति किमयं प्रसज्यप्रतिषेधः किम्वा प्रतियोगिविधानं(।) यदि प्रसज्यप्रतिषे[6]धस्तदा प्रमेयत्वादिवत् साधारणानैकान्तिकोयं नित्यधर्मोपलब्धिः प्रतिषेधमात्रस्यानित्यत्वरहितेष्वसत्स्वपि सम्भवात्। अथ प्रतियोगिविधानन्तदाप्यनन्तरो[7]दितया युक्त्या हेतुप्रतिरूपत्वायोगः। अन्यस्त्वन्यथेदं सूत्रद्वयं व्याचष्टे। यो हेतुर्हेतुकालेऽपदिष्टोऽत्येत्यपैति। कस्मादपैति। प्रत्यक्षेणागमेन उभयेन वा[8] पीड्यमानः स कालमतीत इति कालातीत इत्युच्यते। कुतः पुनः प्रत्यक्षागमविरोधो लभ्यत इति चेत्। चतुर्लक्षणो हेतुरिति वचनात्। तथाहि

86b पूर्ववच्छेष[9]वत्सामान्यतो दृष्ट(न्या० सू० १।२।५)ञ्चेत्यत्र चतूरूपो हेतुरिष्टः। पूर्ववन्नाम साध्ये व्यापकं। शेषवदिति तत्समानेस्ति। सामान्यतश्च दृष्टञ्च शब्दादविरुद्धञ्चेति। तथा भाष्यवचनमप्यस्ति।[1] "यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स" इति। तदेवं त्रैरूप्ये सति प्रत्यक्षागमाभ्यां यो बाध्यते

दास्तथैवाहो( स्वि )दन्यथै( वे )ति । तत्ते चिन्त्यमानमिहातिप्रसज्यत

---

स कालात्ययापदिष्टः। स च त्रिधा भिद्यते प्रत्यक्षविरुद्ध आ[2]गमविरुद्ध उभयविरुद्ध-श्चेति (।) प्रत्यक्षविरुद्धो यथा अनुष्णोग्निर्द्रव्यत्वादुदकवत्। आगमविरुद्धो यथा ब्राह्मणेन सुरा पातव्या द्रवत्वात् क्षीरवत्। उभयविरुद्धो यथाऽ[3]रश्मिवच्चक्षुरिन्द्रिय-त्वाद् घ्राणादिवदिति। न चायं किल पक्षविरोधः पक्षविरोधस्य प्रतिक्षेपादिति। तदेतत् त्रैरूप्यलक्षणानवबोधवैशद्यं (।) त्रैरूप्यं हि यदा[4] स्वं प्रमाणैः परिनिश्चितं पक्षधर्मत्वादिकं त्रयं च यत्र बाधा तत्र प्रतिबन्धोस्ति। बाधाविनाभावयोर्विरो-धात्। अविनाभावो हि सत्येव साध्यधर्मे हेतोर्भावः[5] कथञ्चासौ तल्लक्षणो धर्मिणि हेतुः स्यान्न चात्र साध्यधर्म इत्यादिकमत्राबाधितविषयत्वदूषणानुसारेण वक्तव्यं। यत्र पुनरियं बाधोदाहृता न[6] तेषां त्रैलक्षण्यं मनागप्यस्ति प्रतिबन्धवैकल्यात्। अभ्युपगतपक्षप्रयोगस्य च पक्षदोष एवायं युक्तः। यत्पुनः पक्षदोषत्वपरिहाराय बह्वसम्बद्धमुद्ग्राहि[7]तं तदत्यन्तमसारमिति नेहावसीयते ॥०॥

यस्मात्प्रकरणचिन्तेति प्रकरणं भाष्ये निरूपितं। तस्योदाहरणं। अणुरण्व-न्तरकार्यत्वं प्रतिपद्यते[8] नवेति चिन्तायाङ्कश्चिदभिधत्ते। अणुरण्वन्तरकार्यो रूपादिमत्वात् तद्द्व्यणुकादिवदिति। योसावणोरणुः कारणत्वेनोपादीयते तत्रापि रूपादिमत्वमस्तीति[9] चिन्ता किमियं रूपादिमत्वादण्वन्तरकार्यो न वेति चिन्ता- 87a याञ्च यदि तस्याप्यण्वन्तरकार्यत्वं रूपादिमत्वादिति वक्ति तदा तस्यापि रूपादि-मत्वमस्तीति पुनरपि चिन्ता[1] तदेवमनवस्थारूपं प्रकरणं प्रवर्त्तयतीति प्रकरणसम इत्युच्यते। अथाणुरण्वन्तरकार्यत्वं न प्रतिपद्यते रूपादिमत्वे सति तदानैकान्तिको हेतुरिति तस्माद् भि[2]द्यतेऽनैकान्तिकात् प्रकरणसमः। न चायम्विरुद्धोऽविपर्यय-साधकत्वात्। नासिद्धः पक्षधर्मत्वदर्शनात्। न कालात्ययापदिष्टः प्रत्यक्षागमाभ्या-मबाध्यमानत्वात्।[3] अतोऽर्थान्तरमिति। अथवा प्रवेशे करणं प्रकरणञ्चेति कारण-सिद्धिरित्यर्थः। प्रवेशे सिद्धिरितीयं चिन्ता यस्माद्धेतोरपदिष्टा भवति स प्रकरण-समः[4] स प्रदेशसाधकत्वात् समः। यथैकदेशेऽसाधकत्वन्तथेतरत्रापीत्यसाधकत्व-सामान्यात् समः। तस्मादेकदेशवर्त्ती धर्मः प्रकरणसमः। तद्यथा पृथिव्यप्तेजोवा[5]-य्वाकाशान्यनित्यानि सत्तावत्वादिति। अत्रापि यद्यक्षपादमतानुसारी तावदेवं प्रमाणयति। परमाणुः परमाण्वन्तरपूर्व्वको रूपादिमत्वाद् द्व्यणुकादिवदि[6]ति तदा तस्याभ्युपेतविरोध इति नायमतीतकालाद् भिद्यते। अथ बौद्धः करोति। तदापि हेतोरसिद्धिः परमाणूनां रूपादिव्यतिरेकेणानभ्युपगमात्। अयोगाच्च[7] द्व्यणुकादीनाञ्चा-भावादुभयविकलो दृष्टान्तः। यदाप्यनपेक्षितसिद्धान्तो न्यायवादी ब्रूते तदापि

द्वितीयपक्षोदितदोषानिवृत्तिरिति नायमसिद्धाद्व्यावर्त्तते। योऽ[8]प्यनुमेयैकदेशवर्त्ती धर्मः पृथिव्यादीन्यनित्यानि गन्धवत्वादिति अयमप्यपसिद्धान्तान्तर्भूत एवेति न पृथग्वा-
87b च्यः। नासिद्धः पक्षैकदेशधर्मत्वात्। सपक्षैकदेशवर्त्तिव[9]दिति चेत् विषमोयमुपन्यासः। सपक्ष एव च सत्वमित्यत्र हि समुच्चीयमानावधारणमेव न सकलसपक्षधर्मतां साधनस्य प्रतिपादयति। अनुमेये सत्ववचनं पुनरयोगव्य[1]वच्छेदेन नियन्तृभूतम-शेषसाध्यधर्मिधर्मतायाः प्रतिपादकमित्यनेनैव पक्षैकदेशासिद्धभेदानामपोहः कृत इत्यपार्थकं यत्नान्तरमिति यत्किञ्चिदेतत् ॥०॥

भावि[2]विक्तोप्यत्रैव खररवे पतितः। प्रकरणसममन्यथा समर्थयति। यस्मा-द्धेतो(:) प्रकरणचिन्ता विपक्षस्यापि विचारः पश्चाद् भवति स एवं लक्षणो हेतुनिर्णयाय योपदिश्यमानः प्र[3]करणसमो भवति। प्रकरणे साध्ये समस्तुल्यः सत्त्वे ऽसत्त्वे वा यथा सत्सर्वज्ञमितरतद्विपरीतविनिर्मुक्तत्वाद् रूपादिवदिति। यस्मादयं हेतुरुभयत्र समानो योप्यस[4]त्वं साधयति तस्यापि समानः। कथमसत्स-र्वज्ञत्वमितरतद्विपरीतविनिर्मुक्तत्वात् खरविषाणवदिति। न चायं किलोभयधर्म-त्वेप्यनैकान्तिको विपक्षवृत्तिवैकल्या[5]त्। तदिदमाचार्येण स्वयं प्रमाणविनिश्चये* प्रतिसि[?षि]द्धं। कम्पुनरत्र भवान् विपक्षं प्रत्येति साध्याभावं। कथमिदानीं हेतुं विपक्षवृत्तिरुभयधर्मेणैवेत्यादिना। अर्थग्रहण[6]व्याख्याने च यदुक्तं तदत्रापि वक्तव्यं। विशेषेण दूषणञ्चास्य प्रपञ्चेनोक्तमेव। एवं प्रकरणसमातीत-कालयोरनुपपत्तिः। साध्यव्यभिचारस्य तु युज्यते हेत्वाभासत्वं[7] न तु यथा भवता-मभ्युपगमः। तथा हि भवन्तः सन्दिग्धविपक्षव्यावृत्तिकस्यानैकान्तिकत्वं न प्रति-पद्यन्ते। अदर्शनमात्रेणैव व्यतिरेकसिद्ध्यभ्युपगमात्। अत एव च भवद्भि[8]रप-गतस[?श]ङ्कैरेवं प्रयुज्यते प्राप्यकारिणी चक्षुःश्रोत्रे बाह्येन्द्रियत्वात् घ्राणादिवत्। सविकल्पं प्रत्यक्षं प्रमाणत्वादनुमानवदित्यादि। न चादर्शनमात्रेणैव विना प्रति-
88a बन्धे[9]न व्यतिरेकसिद्धिरिति प्रतानितमन्यत्र।

आत्ममृच्चेतनादीनां यो भावस्याप्रसाधकः।
स एवानुपलम्भः किं हेत्वभावस्य साधक (४५) इत्यादिना।

तथा सपक्षविपक्षयोः सन्दि[1]ग्धः सदसत्वस्यापि सम्यग्ज्ञानहेतुत्वमेव युष्माभि-रिष्यते नानैकान्तिकत्वं यथा सात्मकं जीवच्छरीरम्प्राणादिमत्त्वादिति। अस्य च तद्भावः प्रतिपादितः प्रमाणविनिश्चया[2] दौ विरुद्धप्रभेदस्तु भारद्वाजविहितः प्रति-

*आचार्यधर्मकीर्तिप्रणीतेषु सप्तसु न्यायप्रबन्धेष्वन्यतमो ग्रथः (bStan-ḥgyur, mdo.XCV. 11)

ज्ञाविरोधप्रस्ताव एव निराकृतः। साध्यसमेपि योयमन्यथासिद्धो वर्ण्यते यथा-ऽनित्याः परमाणवः क्रियावत्वाद् घटादिवदि[3]ति अयमपि किल साध्यसमो यस्मात् मूर्तिक्रियारूपादिमत्वादणूनां क्रियावत्वं नानित्यत्वादिति। स नोपपद्यते। धर्मिणि सिद्धत्वान्नहि धर्मिणि विद्यमान एवासिद्धो[4] हेतुर्युज्यते। सर्वहेतूनामसिद्धताप्रसङ्गात्। नैतदेवन्नहि पक्षेस्तीत्येतावता पक्षधर्मत्वं। साध्यवशेन हि धर्मिणः पक्षधर्मत्वमिष्यते। केवलस्य साध्यत्वा[5]त् (।) न च साध्यो धर्मो यदि धर्मिणि तेन साधनेन विना न सम्भवति तस्य च साधनस्य साध्यधर्माभावे धर्मिणा सम्भवस्ततो हेतोः पक्षधर्मत्वं। यदा पुनरन्यथापि[6] साधनायोपात्ते धर्मिणि धर्म उपपद्यते तदा हेतुत्वमेवञ्च विशिष्टमेव सत्वं पक्षधर्मत्वेन विवक्षितं। अन्यथासिद्धत्वं युक्तमेव साध्यसमं। तदिदमत्र प्रतिविधानं[7] यदि खलु साध्यधर्माभावे धर्मिणि असम्भवो हेतोरेवं विधमेव सत्वं पक्षधर्मत्वेन विवक्षितं न तु भावमात्रं तदा किन्त्विदित्थंभूतं पक्षधर्मत्वमविज्ञातमेवानुमेयप्रकाश[8]कमाहोस्वित् परिनिश्चितमेवेति प्रकारद्वये यद्यविज्ञातं प्रकाशकं तदाज्ञापकहेतुन्यायमतिवर्त्तते (।) ज्ञापको हि हेतुः स्वात्मनि ज्ञानापेक्षो ज्ञाप्यमर्थं प्रकाशयति। सत्ता[9]मात्रेण च हेतवो विप्रतिपत्तिनिराकारणपटवः सन्तीति प्रतिवादिनां परस्परपराहतं प्रवचननानात्वं न भवेत्। विज्ञातस्यापि गमकत्वे प्रमाणाद्वा तस्य परिनिश्चयः प्र[1]माणाद्वा। न तावदप्रमाणस्य भूतार्थनिश्चयहेतुत्वाभावादप्रमाणाद् गतिरन्यथा प्रामाण्यमेवावहीयते। यस्मादिदमेव प्रमाणस्य प्रमाणत्वं यद्यथावस्थितवस्तुप्रका[2]शकत्वं। तच्चेदमप्रमाणस्याप्यस्ति तदा कथं तव प्रमाणात्साध्ये धर्मिणि विना साध्यधर्मेणासद्भूष्णोर्हेतोः सत्त्वम्पक्षधर्मत्वेनाधिगम्यते[3] तदापि यत एव प्रमाणाद्धेतोः सिद्धिस्तत एव साध्यधर्मस्यापीयं जायत इति किमर्थमयमकिञ्चित्करो हेतुरुपादीयते। न च हेतोरेव केवलस्य ततः सिद्धि[4](:) साध्यधर्मस्य तु नेति युक्तम्वक्तुं। हेतोरपि ततोऽसिद्धिप्रसङ्गात् तथा ह्येवमयं हेतु(:) तत्र धर्मिणि सिध्यति यद्यनेन साध्यधर्मेण विनेह नोपपद्यते सहैव तू[5]पपद्यत इति सिध्येत्। तथा च कथन्तत एव प्रमाणात्साध्यधर्मस्यापि न सिद्धिः सञ्जातेति चिन्तनीयमेतत्। एवञ्च तेनैव प्रमाणेन सहास्य साध्यधर्मस्य[6]। गम्यगमकभावो न त्वनेन हेतुनेति महदनिष्टमापद्यते। एवम्विधपक्षधर्मत्वसमाश्रयणे च यावत् साध्यस्यासिद्धिस्तावद्धेतोरपि यावच्च हेतोरसिद्धिस्तावत्सा[7]ध्यस्यापीति परस्पराश्रयप्रसङ्गः। पक्षधर्मत्वनिश्चयवेलायाञ्च साध्यधर्मसिद्धिः सम्पद्यत इति व्यर्थमुत्तरलिङ्गरूपानुसरणमित्थञ्च न द्विलक्षणश्चतुर्लक्षणः पञ्च[8]लक्षणश्च हेतुर्वक्तव्यः। अस्मन्मते तु धर्मिणि सत्वमात्रं विज्ञाय च तदुत्तरकालमन्वयव्यतिरेकयोर्विज्ञानमन्वयव्यतिरेकौ वा सर्व्वोपसंहारेण विज्ञायत उत्तरकालं[9] धर्मिणि सत्वमात्रं विज्ञातमतश्चानन्तर्येणैव तत्सामर्थ्यात्साध्यधर्मस्य तत्र प्रतीतिरुप-

44b

44a

इति प्रतन्यते। हेत्वाभासाश्च यथान्यायन्निग्रह[7]स्थानमिति एतावन्मात्र-मिष्टमिति ॥

लोकेऽविद्यातिमिरपटलोल्लेखनस्तत्त्वदृष्टे
र्वादन्यायः परहितरतैरेष सद्भिः प्रणीतः।
तत्वालोकं तिमिरयति तं दुर्विदग्धो जनोय-
न्तस्मा[8]द्यत्नः कृत इह मया तत्समुद्घातनाय ॥ न ॥(३)

---

पद्यते (।) तेनेदमत्र सकलं दोषजालं नभसीवामले जले नावस्थानमलं लभत इत्यलमप्रतिष्ठित[1]मिथ्याप्रलापैरिति विरम्यते।

यद्येवं किं पुनरत्रेष्टमिष्टमित्याह। हेत्वाभासास्तु यथान्यायमित्यादि(2a7) ये न्याया हेत्वाभासास्तदुक्तिर्निग्रहस्थानम्भवति। ते च येस्माभिरुक्ताः॥

एकाप्रसिद्धिसंदेहेऽप्रसिद्धव्यभिचारभाक्।
द्वयोर्व्विरुद्धोसिद्धौ च संदेहव्यभिचारभागि(४६)ति।

ननु चायं वादन्यायमार्गः सकललोकानिबन्धनबन्धुना वादविधानादावार्य[3] वसुबन्धुना महाराजपथीकृतः (।) क्षुण्णश्च तदनु महत्यां न्यायपरीक्षायां कुमति-मतमन्त[ ?मत्त ]मातङ्गशिरःपीठपाटनपटुभिराचार्यदिग्नागपादैस्तत्किमिदं पुनश्च-र्व्वितच[4]र्व्वणमास्थितं त्वयेति। एतच्चोद्यपरिहारपरमिमं श्लोकमुपन्यस्यतिपन्यस्यते लोक(2a8)इत्यादि। तिमिरञ्च पटलञ्चेति तिमिरपटलं अविद्यैव तिमिरपटलम-विद्यातिमिर[5]पटलं भूतार्थदर्शनविबन्धकत्वात्। तस्योल्लेखनो वादन्याय इति सम्बन्धः(।)उल्लेखनशब्दः कर्तृसाधनः। कस्य पुनरविद्यातिमिरपटलमित्याह। तत्त्व दृष्टेस्त[6]त्वदर्शनस्य। प्रज्ञालोचनस्येत्यर्थः। य एष समनन्तरमावेदितो वादन्यायः। सद्भिः पूर्वाचार्यैः परहितरतैः करुणापारतन्त्र्याल्लोकान् सम्यग्वर्त्मनि व्यवस्थाप-यितुं प्र[7]णीतः परां प्रसिद्धिं नीतो लोके सुष्टु स्फुटीकृत इत्यर्थः। न तु परस्पर्द्धया नापि यशःकामतादिभिः। त [?य] द्येवन्तर्हि तदवस्थितं चोद्यमित्यत आह। तत्वस्यालोकमुद्योतम्वा[8]दन्यायमाचार्यैरुपविष्टं (।) तिमिरयत्यन्धकारीकरोति कुदूषणतमसा प्रच्छादयतीति यावत्। कः पुनरसावतिसाहसिको यो महानागैः क्षुण्णं

89b पन्थानं रोद्धुमीहत इत्याह[8] दुर्विदग्धः सम्यग्विवेकरहिततया जनोयमुद्योतकर-प्रीतिचन्द्र(?)भाविविक्तप्रभृतिः। यतश्च एवं तस्माद्यत्नः कृत इह वादन्यायप्रकरणे मया तस्य महद्भिरुद्भावितस्या[1]न्तराजतैरवधूतस्य समुज्वालनाय। कुदूषणपरि-हारेण तन्नीत्युद्योतनेन मम व्यापृतत्वान्न मया पिष्टं पिष्टमिति संक्षेपार्थः॥

**वादन्यायो नाम प्रकरणं समाप्तं (॥)**

**कृतिरियमाचार्यधर्म्मकीर्त्तिचरणानां ॥ त् ॥**

**अलेखि वागीश्वरेणेति[1] (॥)**

अनर्घं (?) वनितावगाहनमनल्पधीशक्तिना[2]
प्यदृष्टपरमार्थसारमधिकाभियोगैरपि।
मतं मतितमः स्फुटम्प्रतिविभज्य सम्यग्मया
यदाप्तमकृशं शुभम्भवतु तेन शान्तो जनः॥ (४७)

**अहञ्च**

नैरात्म्यबोधपरिपाटि[3]तदोषशैलसम्बुद्धभारवहनक्षमभूरिशक्त-
मञ्जुश्रियः श्रियमवाप्य समस्तसत्त्वमर्वावृतिक्षयविधानपटुर्भवेयं।
महारयेनैव न किञ्चिदत्र त्यक्तम्वि[4]विक्तं न विभज्यमेव।
तथापि मन्दप्रतिबोधनार्थमालोक एष ज्वलितः प्रदीपः॥ (४८)
लोकेऽविद्यातिमिरपटलोल्लेखनस्तत्त्वदृष्टे
वादन्यायः परहितरतैरेष सम्य[5](क्) प्रणीतः।
तत्त्वालोकं तिमिरयति तं दुर्विदग्धो जनोयन्
तस्माद् यत्नः कृत इह मया तत्समुज्वालनायेति॥ (४९)

विपञ्चितार्था **नाम वादन्यायटीका समाप्ता॥ ॥[6]**

**कृतिरियं** सान्तरिक्ष **[? शान्तरक्षित]पादानामिति॥**

**सम्वत आवू२(272 N. E.—1152 A.D.)श्रावणकृष्ण एकादश्यां लिखितं मया।** राजाधिराजपरमेश्वरपरमभट्टारकः **श्रीमदानन्ददे'वपादीयविजयराज्ये शुभदिने॥**

**ग्रन्थस्यास्य प्रमाणञ्च निपुणैर्नवशताऽधिकं।**
**सहस्रद्वितयं सम्पत् [?म्यक्] संख्यातम्पूर्व्वशुरिभिः [?सूरिभिः]॥०॥**

**शुभमस्तु सर्व्वजगतां इ[8]...............................**
**...............................सर्वैः रक्षितव्यम्प्रयत्नत इति॥**

**नमः सर्वज्ञाय॥[9]**

A. ( भारतीयानां नैयायिकानां कालनिश्चायकं चक्रम् )

| A. C. | (बौद्धाः) | (ब्राह्मणाः ᐯ) | (जैनाः ᐯ) | A. C. |
|---|---|---|---|---|
| 150 | | अक्षपादः | | 150 |
| 175 | | | | 175 |
| 200 | | | | 200 |
| 225 | | | | 225 |
| 250 | नागार्जुनः | | | 250 |
| 275 | | | | 275 |
| 300 | | वात्स्यायनः | | 300 |
| 325 | | | | 325 |
| 350 | | | | 350 |
| 375 | (मैत्रेय.) | | | 375 |
| 400 | असंगः वसुबंधुः | | | 400 |
| | BLDP | | | |
| 425 | दिङ्नाग. | | | 425 |
| 450 | (शंकरस्वामी) | (कालिदासः) | | 450 |
| 475 | | | | 475 |
| 500 | | | | 500 |
| 525 | | | | 525 |
| 550 | | उद्योतकरः | सिद्धसेनदिवाकरः | 550 |
| 575 | चंद्रगोमी | | | 575 |
| | BLDPT | | | |
| 600 | धर्मपाल. ईश्वरसेन. | | सिद्धसेनः समन्तभद्रः | 600 |
| | T BLDP | | | |
| 625 | धर्मकीर्त्तिः | (कुमारिलः) | | 625 |
| | BLDP | | | |
| 650 | देवेन्द्रमतिः | | | 650 |
| | BLTP | | | |
| 675 | शाक्यमतिः | | | 675 |
| | P L | | | |
| 700 | *जिनेन्द्रबुद्धिः प्रज्ञाकरगुप्तः धर्माकरदत्तः | कल्याणरक्षितः | | 700 |
| | S L B | | | |
| 725 | रविगुप्तः धर्मोत्तरः | | | 725 |
| | DP L | | | |
| 750 | यमारि. | | अकलंकदेवः | 750 |
| | BL | | | |
| 775 | विनीतदेवः | (शंकराचार्यः 785) | | 775 |
| | L | | | |
| 800 | शंकरानन्दः | | माणिक्यनंदी विद्यानन्दः | 800 |
| 825 | शांतरक्षितः (740-840) अर्चटः | | मल्लवादी | 825 |
| | | वाचस्पतिमिश्रः (841) | | |
| 850 | कमलशीलः जिनमित्रः | | प्रभासनन्दी | 850 |
| 875 | | | | 875 |
| [illegible] | | | अमृतचंद्रः | 900 |
| 1000 | मुक्ताकलशः जेतारिः रत्नकीर्त्तिः | उदयनः (984) जयन्तः | | [illegible] |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| 725 | . . | | | | | | | | |
| | | §° | DP \| L | | | | | | |
| 750 | . . | . . | यमारिः . . | . . | . . | | अकलंकदेवः . . | | 750 |
| | | | \| Bl | | | | | | |
| 775 | . . | . . | विनीतदेव | (शंकराचार्यः 785) . . | | | . . | . . | 775 |
| | | | \| L | | | | | | |
| 800 | . . | . . | शंकरानन्दः | . . | | . . | माणिक्यनंदी | विद्यानन्दः | 800 |
| 825 | शान्तरक्षित (740-840) | अर्चटः | . . | . . | | . . | मल्लवादी | . . | 825 |
| | | | | वाचस्पतिमिश्रः (841) | | | | | |
| 850 | कमलशील | जिनमित्र | . . | . . | | . . | प्रभासनन्दी . . | | 850 |
| 875 | . . | . . | . . | . . | | . . | . . | . . | 875 |
| 900 | . . | . . | . . | . . | | . . | . . | अमृतचंद्र | 900 |
| 925/950 | . . | . . | . . | उदयन (984) | | . . | प्रभाचंद्र | | 925/950 |
| 1000 | मुक्ताकलशः | जेतारि, रत्नकीर्ति | . . | जयन्त. | | . . | कल्याणचंद्रः | समन्तभद्रः (लघु-) | 1000 |
| | | \| V | | | | | | | |
| 1025 | †ज्ञानश्रीमित्र | रत्नाकरशान्तिः | . . | . . | | . . | . . | . . | 1025 |
| | | V | | | | | | | |
| 1050 | ‡रत्नवज्रः | दीपंकरश्रीज्ञानः (982-1054) | . . | . . | | . . | . . | . . | 1050 |
| | \| T | | | | | | | | |
| 1075 | (महाजन) | . . | . . | . . | | . . | . . | . . | 1075 |
| | \| T | | | | | | | | |
| | (सज्जनः) | | | | | | | | |
| 1100 | . . दुर्वेकमिश्र. . . | | . . | . . | | . . | . . | . . | 1100 |
| 1125 | . . | . . | \| L . . | . . | | . . | . . | . . | 1125 |
| 1150 | . . | . . | वकुपंडित | वरदराजः | हेमचंद्र | (1088-1172) | देवसूरि (1088-1169) | | 1150 |
| | | | \| L | | | | | | |
| 1175 | . . | . . | | . . | | . . | . . | . . | 1175 |
| 1200 | §मोक्षाकरगुप्त | दानशीलः | शाक्यश्रीभद्र (1127-1225) | गंगेश | | . . | . . | . . | 1200 |
| | | | \| L | | | | | | |
| 1225 | . . | . . | | . . | | . . | . . | . . | 1225 |
| 1250 | . . | स-स्क्य-पण्-छेन् (1182-1251) | | वर्धमान | वल्लभाचार्यः | | . . | . . | 1250 |
| 1275 | . . | . . | . . | शंकरमिश्रः | | . . | . . | . . | 1275 |

B. History of Buddhism (II. pp. 146, 152, 154, 155) by Bu-ston (1322 A.C.).
L. कलोङ-वँल् (1707 A.C.) गसुङ-ऽबुम् (ल्ह-स. च ६१क, ६१ख)।
D. देब्-गुतेर्-स्ङोन्-पो (ल्ह-म. छ. ९ख)।
P. स्बुग्-प-पद्म-द्कर्-पो (1520 A.C.) छोस्-ऽब्युङ (p. ५०ख)।
T. तारानाथ (1608 A.C.) छोस्-ऽब्युङ (गचङ १९०ख, २०८ ख)।
S. सलन-ऽग्युर (Cordier, म्दो-XCVIII.).
V. Vidyābhūṣaṇa's History of Indian Logic (Calcutta, 1921).
* A.B. Keith अपि स्वीकरोति 700 A.C. (Indian Studies in Honour of C.R. Lanman. 1929 P.168).
† ज्ञानश्रीभद्रो वा (Stan. mdo. Cordier LXXIII. 56).
‡ ङोंग्-ब्लो-ल्दन्-शेस्-रब् (मृत्युः 1109 A.C.) भोटपंडितस्य सहायौ महाजन-सज्जनौ रत्नवज्रस्य पुत्र-पौत्रौ। (Stan. mdo XLIV.5).
§ जगत्तलाविहारीयः Stan. mdo CXII.28.

# B. नामानुक्रमणी

---

# C. श्लोकानुक्रमणी

## D. चीनभाषोपलब्धानां न्यायग्रंथानां कर्तृकालक्रमेण सूची

| संख्या | कर्त्ता A.C. | संख्या | ग्रन्थः | Nanjio's | भाषान्तरकारः | भाषान्तरकालः A.C. |
|---|---|---|---|---|---|---|
| १ | नागार्जुनः 250 | १ | उपायहृदयं* | 1257 | चि-चि-आये | 472 |
| | | २ | विवादशमनशास्त्रं† | 1251 | विमोक्षप्रज्ञः | 541 |
| | | ३ | न्यायद्वारतर्कशास्त्रं | 1224 | Hiouen-tsang | 648 |
| | | ४ | ,, | 1223 | I-tsing | 711 |
| २ | असंगः 400 | १ | ‡ प्रकरणार्यवाचाशास्त्रकारिका | 1202 | Hiouen-tsang | 645 |
| ३ | वसुबंधुः 400 | १ | तर्कशास्त्रं | 1252 | परमार्थः | 550 |
| ४ | शंकरस्वामी 450 | १ | न्यायप्रवेशः § | 1216 | Hiouen-tsang | 647 |

* उपायकौशल्यहृदय—इति Nanjio.

† इयमेव भोटभाषान्तरीकृता विग्रहव्यावर्तनीकारिका (Stan. mdo. XVII. 5; G.O.S. XLIX,) प्रतिभाति नामसारूप्यात् ।

‡ वादप्रकरणं, वादप्रकरणकारिका वा भवितुमर्हति ।

§ अयमेव भोटभाषान्तरे (Stan. mdo. XCV. 8) दिङ्नागस्य कृतिः ख्यायते ।

# E. भोटभाषोपलब्धानां न्यायग्रंथानां कर्तृकालक्रमेण सूची

| संख्या | कर्ता A.C. | संख्या | ग्रंथः | टीकाकारः | सतुन्-ग्युर् मदो | भाषान्तरकारः | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | | भारतीयः | भोटदेशीयः | कालः A.C. |
| १ | नागार्जुनः 250 | १ | विग्रहव्यावर्तनी कारिका | | XVII. 5 | ज्ञानगर्भः | द्पल्-ब्चेग्स् | 840 |
| | | | | नागार्जुनः (वृत्तिः) | XVII. 10 | ,, | देवेन्द्ररक्षितः | ,, |
| २ | दिङ्नागः 425 | १ | प्रमाणसमुच्चयः | | XCV. 1 | कनकवर्मा | दद्-पऽि-शेस्-रब् | 1050 |
| | | | | दिङ्नागः | XCV. 2 | मणिभद्ररक्षितः | (श-म.) सेङ्ग-र्ग्यल् | 1080 |
| | | | | ,, | XCV. 3 | कनकवर्मा | दद्-गऽि-शेस्-रब् | 1050 |
| | | | | जिनेन्द्रबुद्धिः 700 (टीका) | CXV. | | (द्पङ्स्) ब्लो-ग्रोस्-ब्र्तन्-प | 1300 |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| | | २ | आलम्बनपरीक्षा | | XCV. | 4 | | | |
| | | | | दिङ्नागः (वृत्तिः) | XCV. | 5 | | | |
| | | | | विनीतदेवः 775 (टीका) | CXII. | 5 | शाक्यसिंहः | द्पल्-ब्र्चेग्स् | 840 |
| | | ३ | त्रिकालपरीक्षा | | XCV. | 6 | शान्त्याकरगुप्तः | (प-छब्)छुल्-ख्रिम्स्-ग्र्यल् | 1100 |
| | | ४ क | न्यायप्रवेशः | | XCV. | 7 | सर्वज्ञरक्षितः (कश्मीर-) | ग्रग्स्-प-र्ग्यल्-म्छन् (1147-1216) | ,, |
| | | ४ ख | ,,[१] | | XCV. | 8 | धर्मरत्नः(चीन-) | (स-स्क्य) ग्शोन्-स्तोन् | 1250 |
| | | ५ | हेतुचक्रड(?ह)मरु: | | XCV. | 9 | शांतरक्षितः (740-840) | धर्मालोकः | 840 |
| ३ | चंद्रगोमी 575 | १ | न्यायसिध्यालोकः | | CXII. | 6 | श्रीसिंहः | वैरोचनरक्षितः | ,, |
| ४ | धर्मकीर्त्तिः 625 | १ | प्रमाणवार्त्तिकं | | XCV. | 10 | सुमूतिश्रीशांतिः | द्गे-वञ्-ब्लो-ग्रोस् | 1050 |

[१] Hiouen-tsang चीन-भाषान्तरतो भोटभाषायामनूदितः ।

| संख्या | कर्ता A.C. | संख्या | ग्रंथ: | टीकाकार: | सत्न्-ज्युर् | भाषान्तरकार: | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | मृदो | भारतीय: | भोटदेशीय: | काल: A.C. |
| | | | | धर्मकीर्त्ति: (वृत्ति:) [1] | XCV. 16 | सुभूतिश्रीशांति: | द्गे-वङ्-ब्लो-ग्रोस् | 1050 |
| | | | | देवेन्द्रमति: 650 [2] (पंजिका) [3] | XCVI | ,, | ,, | ,, |
| | | | | शाक्यमति: 675 [2] (टीका [3]) | XCVII, XCVIII | ,, | ,, | ,, |
| | | | | प्रज्ञाकरगुप्त: 700 (वार्त्तिकालंकार:) [3] | XCIX, C | भव्यराज: | (र्डोग्) ब्लो-ल्दन्-शेस्-रब् | 1076—92 A.C. |
| | | | | यमारि: 750 (वार्त्तिकालंकारटीका) | CIV, CV, CVI, CVII | सुमति: | ,, | ,, |

[1] प्रथमपरिच्छद एव। [2] देवेन्द्रबोधि-शाक्यबोधी इति विद्याभूषणमहाशया: History of Indian Logic, pp. 319, 320.
[3] द्वितीय-तृतीय-चतुर्थपरिच्छेदेष्वेव।

| | | | | | | |
|---|---|---|---|---|---|---|
| २ | प्रमाणविनिश्चयः | [1] जय(नन्त): 950 (टीका) | CI. CII | दीपंकररक्षितः[2] | ब्यङ-छुब्-शेस्-रब् | 1080 |
| | | रविगुप्तः 725 (टीका)[3] | XVII[1]. 3 | | | |
| | | ,, (टीका[4]) | CIV. 1 | | | |
| | | शंकरानन्दः800(,,) | CIII | | | |
| | | | XCV.11 | परहितभद्रः (कश्मीर-) | (ङोग्)ब्लो-ल्दन्-शेस्-रब् | 1076-92 |
| | | धर्मोत्तरः725(टीका) | CIX, CXI. | ,, | ,, | ,, |
| | | ज्ञानश्रीभद्रः 1076 (,,) | CX. 2 | ज्ञानश्रीभद्रः | (ख्युङ-पो)छोस्-किय-ब्चोन् | 1076 |

[1] जिन इति विद्याभूषणमहाशयाः ibid. p. 338 [2] विक्रमशिलाविहारीयः। [3] द्वितीयपरिच्छेद एव।
[4] तृतीयपरिच्छेद एव

| संख्या | कर्ता A.C. | संख्या | ग्रंथः | टीकाकारः | स्तन्-ग्युर् मृदो | भाषान्तरकारः | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | | भारतीयः | भोटदेशीयः | कालः A.C. |
| | | ३ | न्यायविन्दुः | | XCV.12 | परहितभद्रः | (ङॉग्) ब्लो-ल्दन्-शेस्-रब् | 1076—92 |
| | | | | धर्मोत्तरः(टीका) | CXI. 2 | ज्ञानगर्भः | धर्मालोकः | 845 |
| | | | | विनीतदेवः 775(,,) | CXI. 1 | जिनमित्रः | ये-शेस्-स्दे | 862 |
| | | | | कमलशीलः 840(,) | CXI. 3 | विशुद्धसिंहः | द्पल्-ब्र्चेग्स् | 845 |
| | | | | जिनमित्रः 862 (पिंडार्थः) | CXI. 4 | सुरेन्द्रबोधिः | ये-शेस्-स्दे | 862 |
| | | ४ | हेतुविन्दुः | | XCV. 13 | प्रज्ञावर्मा | द्पल्-ब्र्चेग्स् | 845 |
| | | | | विनीतदेवः | CXI. 5 | ,, | ,, | ,, |
| | | | | अर्चटः 825 (विवरणं) | CXI. 6 | | | |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| | ५ | संबंधपरीक्षा | | CXV. 14 | ज्ञानगर्भः | नँम्-मुखऽ-स्क्योङ्ग | 845 |
| | | | धर्मकीर्त्तिः (वृत्तिः) | XCV. 15 | | | |
| | | | विनीतदेवः (टीका) | CXII. 1 | ,, | ,, | 845 |
| | | | शंकरानन्दः 800 (वृत्तिः) | CXII. 2 | परहितभद्रः | द्गेऽ-वड़ि-द्दों-र्जे | 1080 |
| | ६ | वादन्यायः | | XCV. 16 | ज्ञानश्रीभद्रः | द्गे-वड़ि-ब्लो-ग्रोस् | 1050 |
| | | | शांतरक्षितः (टीका) | CVIII. 2 | कुमारश्रीभद्रः | ऽफग्स्-प-शेस्-रब् | 1080 |
| | | | विनीतदेवः (टीका) | CXII. 3 | | | |
| | ७ | सन्तानान्तर-सिद्धिः[1] | | XCV. 17 | विशुद्धसिंहः | द्पल्-ब्र्चेग्स् | 845 |
| | | | विनीनदेवः (टीका) | CVIII. 1 | ,, | ,, | ,, |

[1]तंत्रान्तरसिद्धिरिति तु प्रमादपाठः।

| संख्या | कर्ता A.C. | संख्या | ग्रंथ: | टीकाकार: | सतून्-ञ्युर् मृदो | भाषान्तरकार: | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | | भारतीय: | भोटदेशीय: | काल: A.C. |
| ५ | प्रज्ञाकरगुप्त: 700 | १ | सहालम्बनिर्णय: | | CXII. 19 | शान्तिभद्र: | (ब्रो-सेङ-द्कर्) शाक्य-ऽोद् | 1050 |
| ६ | कल्याणरक्षित: 700 | १ | अन्यापोहविचार: | | CXII. 10 | | | |
| | | २ | ईश्वरभंग-कारिका | | CXII. 11 | | | |
| | | ३ | सर्वज्ञसिद्धि-कारिका | | CXII. 7 | जिनमित्र: (कश्मीर-) | द्पल्-ब्र्चेग्स् | 845 |
| | | ४ | बाह्यार्थसिद्धि: | | CXII. 8 | ,, | ,, | ,, |
| | | ५ | श्रुतिपरीक्षा | | CXII. 9 | | | |
| ७ | धर्मोत्तर:725 | १ | प्रमाणपरीक्षा | | CXII. 12 | | (र्ङोग्) ब्लो-ल्दन्-शेस्-रब् | 1076—92 |
| | | २ | लघुप्रमाणपरीक्षा | | CXII. 13 | | ,, | ,, |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | ३ | अपोहप्रकरणं | | CXII. 14 | भव्यराजः (कश्मीर-) | (ऴॉग्) बलो-लदन्-शेस्-रब् | 1076-92 |
| | | ४ | परलोकसिद्धिः | | CXII. 15 | ,, | (प-छब्)ञि-म-ग्रगस् | ,, |
| | | ५ | क्षणभंगसिद्धिः | | CXII. 17 | ,, | (ऴॉग्)बलो-लदन्-शेस्-रब् | ,, |
| | | | | मुक्ताकलशः1000 (विवरणं) | CXII. 18 | विनयाकरः | ग्रगस्-ब्योर्-शेस्-रब् | 1040 |
| ८ | शंकरानंदः 800 | १ | अपोहसिद्धिः | | CXII. 20 | मनोरथः | (ऴॉग्)बलो-लदन्-शेस्-रब् | 1076—92 |
| | | २ | प्रतिबंधसिद्धिः | | CXII. 21 | भव्यराजः | ,, | ,, |
| ९ | शान्तरक्षितः (740-840) | १ | तत्वसंग्रहः | | CXII. 1 | गुणाकरश्रीभद्रः | शि-ब-ऽोद् | 1050 |
| | | | | कमलशीलः840 (पंजिका) | CXIII. 2 CXIV | देवेन्द्रभद्रः | ग्रगस्-ब्योर्-शेस्-रब् | ,, |
| १० | जेतारिः1000 | १ | धर्मधर्मिविनिश्चयः | | CXII. 25 | | | |

| संख्या | कर्ता A.C. | संख्या | ग्रंथः | टीकाकारः | सतन्-ग्युर् मृदो | भाषान्तरकारः | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | | भारतीयः | भोटदेशीयः | कालः A.C. |
| | | २ | बालावतारतर्कः | | CXII. 26 | नागरक्षितः | म्छोग्-दङ्-पोऽि-र्दो-र्जे | 1080 (?) |
| | | ३ | हेतुतत्त्वोपदेशः | | CXII. 24 | कुमारकलशः | शाक्य-ऽोद् | 1050 |
| ११ | रत्नाकरशान्तिः 1025 | १ | अन्तर्व्याप्तिः | | CXII. 23 | कुमारकलशः | „ | 1050 |
| | | २ | विज्ञप्तिमात्रता-सिद्धिः | | CXII. 22 | शान्तिभद्रः (नेपाल-) | „ | „ |
| १२ | रत्नवज्रः 1050 | १ | युक्तिप्रयोगः | | CXII. 27 | सुभूतिश्रीशांतिः | तिङ्-ङे-ऽजिन्-ब्सङ्-पो | 1070 |
| १३ | ज्ञानश्रीमित्रः 1075 | | कार्यकारणभाव-सिद्धिः | | CXII. 29 | कुमारकलशः | शाक्य-ऽोद् | 1050 |
| १४ | दानशीलः[1] 1200 | १ | पुस्तकपाठोपाय-सिद्धिः | | CXII. 16 | दानशीलः | | |
| १५ | मोक्षाकर-गुप्तः 1208 | १ | तर्कभाषा | | CXII. 28 | | (द्पङ्स्) ब्लो-ग्रोस् | 1300 |

[1] शाक्यश्रीभद्रेण सह भोटदेशं गतः 1203 A.C. (Bu-ston II. p. 222 and J.A.S.B. 1889 LVIII.)

## F. *उपलभ्यमानानां बौद्धन्यायग्रंथानां नामानुक्रमणी

| संख्या | ग्रंथः | कर्ता | प्राप्तेः स्थानं | |
|---|---|---|---|---|
| १ | अन्तर्व्याप्तिः ST† | रत्नाकरशान्तिः | St. CXII. | 3 |
| २ | अन्यापोहसिद्धिः T | कल्याणरक्षितः | St. CXII. | 10 |
| ३ | अपोहप्रकरणं T | धर्मोत्तर. | St. CXII. | 14 |
| ४ | अपोहसिद्धिः T | शंकरानन्दः | St. CXII. | 20 |
| ५ | अपोहसिद्धिप्रकरणं S | रत्नकीर्तिः | Bib. Ind. | |
| ६ | अवयविनिराकरणं S | रत्नकीर्तिः | Ṣalu VII. | 8 |
| ७ | अवयविनिराकरणं S | अशोकः | Bib. Ind. | |
| ८ | आगमप्रामाण्यकारिका S | | Ngor xxxviii. | 5 |
| ९ | आलम्बनपरीक्षा T | दिङ्नागः | St. XCV. | 4 |
| १० | आलम्बनपरीक्षा-टीका T | विनीतदेवः | St. CXII. | 5 |
| ११ | आलम्बनपरीक्षा-वृत्तिः T | दिङ्नागः | St. XCV. | 5 |
| १२ | ईश्वरभंगकारिका T | कल्याणरक्षितः | St. CXII. | 11 |
| १३ | उपायकौशल्यहृदयं CS‡ | नागार्जुनः | N. | 1257 |
| १४ | कार्यकारणभावसिद्धिः T | ज्ञानश्रीमित्रः | St. CXII. | 29 |
| १५ | क्षणभंगसिद्धिः T | धर्मोत्तरः | St. CXII. | 14 |

* संकेताः St.=Tibetan Stan-ḥgyur. mdo. (Cordier. Catalogue du Fonds Tibétain, Paris 1915) Bib. Ind=Bibliotheca Indica, Calcutta. For Ṣalu Ngor, Saskya—See Sanskrit Palm-leaf Mss. in Tibet (J.B.O.R.S.Vol. XXI) N. =Nanjio's Catalogue of Chinese Tripitaka.

† Bib. Ind. Calcutta. S=Found in Sanskrit. T=Tibetan. C=Chinese.

‡ Pre-Diṅnāga Buddhist Text on Logic उपायहृदयं (G.O. S.No. XLIX)

| संख्या | ग्रंथ: | कर्त्ता | प्राप्तेः स्थानं | |
|---|---|---|---|---|
| १६ | क्षणभंगसिद्धि: S | रत्नकीर्त्ति: | Bib. Ind. | |
| १७ | क्षणभंगसिद्धिविवरणं *T | मुक्ताकलश: | St. CXII. | 18 |
| १८ | चित्ताद्वैतप्रकरणं S | रत्नकीर्त्ति: | Ṣalu VIII. | 7 |
| १९ | तत्त्वसंग्रह: ST† | शान्तरक्षित: | St. CXIII. | 1 |
| २० | तत्त्वसंग्रह-पंजिका ST† | कमलशील: | St. CXIII. | 2 |
| २१ | तर्कभाषा TS‡ | मोक्षाकरगुप्त: | St. CXII. | 28 |
| २२ | तर्कशास्त्रं CS§ | वसुबंधु: | N. I | 252 |
| २३ | त्रिकालपरीक्षा T | दिङ्नाग: | St. XCV. | 6 |
| २४ | धर्मधर्मिविनिश्चय: T | जेतारि: | St. CXII. | 25 |
| २५ \| २६ \| | न्यायद्वारतर्कशास्त्र C | नागार्जुन: | N. 1223, | 1224 |
| २७ | न्यायप्रवेश: T | दिङ्नाग: | St. XCV. | 7 |
| २८ | ,, ST† | ,, | St. XCV. | 8 |
| २९ | ,, ,,‖ | शंकरस्वामी | N. I | 216 |
| ३० | न्यायविन्दु: ST/ | धर्मकीर्त्ति: | St. XCV. | 12 |
| ३१ | न्यायविन्दु-टीका ST/ | धर्मोत्तर: | St. CXI. | 2 |
| ३२ | न्यायविन्दु-टीका-नुटीकाS | दुर्वेकमिश्र: | Ngor X. | 1 |

* धर्मोत्तरप्रणीतायाः क्षणभंगसिद्धेः टीका ।

† मुद्रितः संस्कृते Gackwad Oriental Sanskrit Series, Baroda.

‡ G.O.S.S. no. XLIX

§ ibid. no. XLIX.

‖ अयमेव भोटभाषान्तरे दिङ्नागकृतित्वक्ता ।

/ मुद्रितः संस्कृते Bibliotheca Indica (Calcutta), चौखम्बासंस्कृत Series (Benares).

| संख्या | ग्रंथ: | कर्त्ता | प्राप्तेः स्थानं |
|---|---|---|---|
| ३३ | न्यायबिन्दु-टीका T | विनीतदेव: | St. cxi. I |
| ३४ | न्यायबिन्दु-पिंडार्थ: T | जिनमित्र: (भारत-) | St. cxi. 4 |
| ३५ | न्यायबिन्दु-पूर्वपक्षसंक्षेप:T | कमलशील: | St. cxi. 3 |
| ३६ | न्यायसिद्ध्यालोक: T | चन्द्रगोमी | St. cxii. 6 |
| ३७ | परलोकसिद्धि: T | धर्मोत्तर: | St. cxii. 15 |
| ३८ | पुस्तकपाठोपाय: T | दानशील:1203 A.C | St. cxii. 16 |
| ३९ | प्रकरणार्यवाचाशास्त्र-कारिका C | असंग: | N. 1202 |
| ४० | प्रज्ञालंकारकारिका S | | Ngor xxxviii. 3 |
| ४१ | प्रतिबंधसिद्धि: T | शंकरानन्द: | St. cxii. 21 |
| ४२ | प्रमाणपरीक्षा T | धर्मोत्तर: | St. cxii. 12 |
| ४३ | प्रमाणपरीक्षा । लघु-T | ,, | St. cxii. 13 |
| ४४ | प्रमाणवार्त्तिकं S T* | धर्मकीर्त्ति: | St. xcv. 10 |
| ४५ | ,, टीका(द्वितीय-परि०)T | रविगुप्त:† | St. cviii. 3 |
| ४६ | ,, टीका(तृतीय-परि०) T | ,, | St. civ. 1 |
| ४७ | ,, टीका T | शंकरानन्द: | St. ciii |
| ४८ | ,, टीका T | शाक्यमति: | St. xcvii, xcviii |
| ४९ | प्रमाणवार्त्तिक-वृत्ति: T | देवेन्द्रमति: | St. xcvi |

* प्रथम-द्वितीय-तृतीय-परिच्छेदा: संस्क्रियमाणा अस्माभि: ।

†प्रज्ञाकरगुप्तस्य शिष्योऽयमिति भोटभाषान्तरे ।

| संख्या | ग्रंथः | कर्त्ता | प्राप्तेः स्थानं |
|---|---|---|---|
| ५० | प्रमाणवार्त्तिक-वृत्तिः T | धर्मकीर्तिः | St. XCV. 18 |
| ५१ | प्रमाणवार्तिकालंकारःST* | प्रज्ञाकरगुप्तः | St. XCIX.C |
| ५२ | ,, ,, टीका T | जय(ानन्त): | St. CI., CII |
| ५३ | ,, ,, टीका T | यमारिः | St. CIV.2, CV., CVI., CVII. |
| ५४ | प्रमाणविनिश्चयः T | धर्मकीर्त्तिः | St. XCV. 11 |
| ५५ | ,, ,, टीका T | ज्ञानश्रीभद्रः | St. CX. 2 |
| ५६ | ,, ,, टीका T | धर्मोत्तरः | St. CIX, CX. 1 |
| ५७ | प्रमाणसमुच्चयः S T † | दिङ्नागः | St. XCV. 1 |
| ५८ | ,, टीका T | जिनेन्द्रबुद्धिः | St. CXV. |
| ५९ | ,, वृत्तिः T | दिङ्नागः | St. XCV. 2 |
| ६० | ,, वृत्तिः T | ,, | XCV. 3 |
| ६१ | प्रमाणान्तर्भावप्रकरणं S | रत्नकीर्त्तिः | Ṣalu VIII. 4 |
| ६२ | बालावतारतर्कः T | जेतारिः | St. CXII. 26 |
| ६३ | बाह्यार्थसिद्धिकारिका T | कल्याणरक्षितः | St. CXII. 8 |
| ६४ | युक्तिप्रयोगः T | रत्नवज्रः | St. CXII. 27 |
| ६५ | वादन्यायः S T‡ | धर्मकीर्त्तिः | St. XCV. 16 |

*अन्त्येषु त्रिषु परिच्छेदेष्वेव। द्वितीयः परिच्छेदोऽस्य मुद्रितः J. B. O. R. S. XXI.

† प्रथमः परिच्छेदोऽस्य भोटभाषान्तरतः संस्कृतेऽनूद्य प्रकाशितो मैसूर विश्वविद्यालयेन।

‡ अयं मुद्र्यते संस्कृते J. B. O. R. S. XXII.

| संख्या | ग्रंथः | कर्त्ता | प्राप्तेः स्थानं | |
|---|---|---|---|---|
| ६६ | वादन्याय-टीका | विनीतदेवः | St. CXII. | 3 |
| ६७ | वादन्याय-टीका S T* | शान्तरक्षितः | St. CVIII. | 2 |
| ६८ | वादन्याय-वृत्तिः T | ,, | St. CXII. | 4 |
| ६९ | विग्रहव्यावर्तनीकारिका†T | नागार्जुनः | St. XVII. | 5 |
| ७० | ,, वृत्तिः T | ,, | St. XVII. | 10 |
| ७१ | विज्ञप्तिमात्रतासिद्धिः T | रत्नाकरशान्तिः | St. CXII. | 22 |
| ७२ | विवादशमनशास्त्रं† C | नागार्जुनः | N.1251 | |
| ७३ | व्याप्तिनिर्णयः S | रत्नकीर्त्तिः | Ṣalu VIII. | 5 |
| ७४ | श्रुतिपरीक्षाकारिका T | कल्याणरक्षितः | St. CXII. | 9 |
| ७५ | सन्तानान्तरसिद्धिः T | धर्मकीर्त्तिः | St. XCV. | 17 |
| ७६ | सन्तानान्तरसिद्धि-टीका T | विनीतदेवः | St. CVIII. | 1 |
| ७७ | संबंधपरीक्षा T | धर्मकीर्त्तिः | St. XCV. | 14 |
| ७८ | संबंधपरीक्षा-टीका T | विनीतदेवः | St. CXII. | 1 |
| ७९ | संबंधपरीक्षानुसारः T | शंकरानन्दः | St. CXII. | 2 |
| ८० | संबन्धपरीक्षा-वृत्तिः T | धर्मकीर्त्तिः | St. XCV. | 15 |
| ८१ | सर्वज्ञसिद्धिकारिका T | कल्याणरक्षितः | St. CXII. | 7 |
| ८२ | सर्वज्ञसिद्धिकारिका T | ,, | St. CXII. | 8 |
| ८३ | सर्वज्ञसिद्धिकारिकाS | रत्नकीर्त्तिः | Ṣalu VIII. | 1 |

* इयं मुद्र्यते संस्कृते J.B.O.R.S. XXI. Pt. III
† ६९, ७२ एकस्यैव प्रकरणस्य नामद्वयं प्रतिभाति G.O.S.S. No. XXLI.

| संख्या | ग्रंथः | कर्त्ता | प्राप्तेः स्थानं |
|---|---|---|---|
| ८४ | सर्वज्ञसिद्धिकारिका S | ? | Ngor XXXVIII. 4 |
| ८५ | सर्वज्ञसिद्धिसंक्षेपः S | शंकरनन्दनः | Ngor XXXVII. 1 |
| ८६ | सहालम्बनिर्णयसिद्धिः T | प्रज्ञाकरगुप्तः | St. CXII. 19 |
| ८७ | सामान्यदूषणदिक्प्रसारितंS | अशोकः | Bib. Ind. |
| ८८ | सामान्यनिराकरणंS | रत्नकीर्त्तिः | Ṣalu. VIII. 9 |
| ८९ | स्थिरसिद्धिदूषणंS | ,, | Ṣalu. VIII. 6 |
| ९० | हेतुचक्रडमरुः T | दिङ्नागः | St. XCV. 9 |
| ९१ | हेतुविन्दुः T | धर्मकीर्त्तिः | St. XCV. 13 |
| ९२ | हेतुविन्दु-टीका T | अर्चटः | St. CXI. 6 |
| ९३ | हेतुविन्दु-टीका-ऽनुटीका S | ? | पं० सुखलाल B.H.U. |
| ९४ | हेतुविन्दु-टीका T | विनीतदेवः | St. CXI. 5 |
| ९५ | हेतुविन्दु-टीका (धर्माकर दत्तीया)-ऽनुटीका S* | दुर्वेकमिश्रः | Ngor. X. 2 |

* अस्यैको हस्तलेखो नयपालराजगुरूणां श्रीहेमराजशर्मणां समीपेपि ।

## G. धर्मकीर्त्तेः[1] सप्त न्यायनिबंधाः सटीकाः

| ग्रंथाः, तट्टीकाकाराश्च | परिच्छेदाः | स्तन्-ज्ग्युर् (म्दो) वेष्ठनं | पृष्ठपंक्त्यंका. | पृष्ठ-पंक्ति-परिमाणं | श्लोकपरिमाणं मूलं | टीका | योगः |
|---|---|---|---|---|---|---|---|
| **१. प्रमाण वार्त्तिकं** | I—IV | XCV.10 | 190a4—250b6 | 59.23 | **1,459**[2] | 1,05,400 | 1,06,859 |
| धर्मकीर्त्तिः (वृत्तिः) | I | XCV.18 | 404b3—535a4 | 130.8 | | 3,500[3] | |
| देवेन्द्रमतिः (पंजिका) | II—IV | XCVI | 1b—390a8 | 388.12 | | 8,748 | |
| शाक्यमतिः (टीका) | I—IV | XCVII | 1b—402a8 | 400.12 | | 17,046 | |
| | | XCVIII | 1b—348a8 | 356.12 | | | |

[1] नागार्जुनकृत्योरेकविंशति पत्राणि विहाय, स्तन्-ज्ग्युर्-संग्रहे ऽव्यवहितानि बौद्धन्यायग्रंथानामेकविंशति वेष्ठनानि (mdo. xcv—cxv); तत्र षोडशसु (xcvi—cxi) केवलं धर्मकीर्तेः सप्त न्यायनिबंधाः सटीकाः, द्वयोः (cxiii, cxiv) शांतरक्षितस्य तत्त्वसंग्रहः सटीकः; शेषयोर्द्वयोः वेष्ठनयोः (xcv, cxii) धर्मकीर्तेरप्यन्येषां च ग्रंथाः। श्लोकपरिमाणेन १,७५,२४४ श्लोकेषु १,३७,३११ श्लोकमिता ग्रंथा धर्मकीर्तिपरिवारस्य, अष्टादशसहस्रमितः शान्तरक्षितीयः, शेषा दिङ्नागप्रभृतीनाम्। संख्यान इह स्नर्-थङ-मुद्रित भोट-स्तन्-ज्ग्युर्-ग्रंथतः प्रतिपृष्ठं सप्त पंक्तयः प्रतिपंक्ति सार्द्ध श्लोकः प्रायेण गृहीतः।

[2] हेम० तालपुस्तकान्ते त्रयाणां परिच्छेदानां ग्रंथपरिमाणं—"(द्वितीये) श्लोकाः २८८, तृतीये श्लोकाः ५३९ चतुर्थे श्लोकाः २८८" इति लभ्यते। त्रुटितस्य आद्यस्य परिच्छेदस्य संख्या भोटभाषान्तरसाहाय्येन ३४४ लब्धा।

[3] इयं संख्या भोटभाषान्तर उपलभ्यते।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| प्रज्ञाकरगुप्तः (भाष्यं) | II—IV | XCIX | 1b—382a7 | 380.11 | | | |
| | | C | 1b—344a6 | 342.10 | | 16,276 | |
| जय(नन्त):(भाष्य-टीका) | ,, | CI | 1b—434a8 | 432.12 | | | |
| | | CII | 1b—375a8 | 373.12 | | 18,148 | |
| यमारिः (भाष्य-टीका) | ,, | CIV. 2 | 208a7—345a8 | 136.15 | | | |
| | | CV | 1b—290a7 | 288.11 | | | |
| | | CIV | 1b—436a8 | 434.12 | | 26,552 | |
| | | CVII | 1b—321a5 | 319.9 | | | |
| शंकरानंदः (टीका) | | CIII | 1b—338a8 | 336.12 | | 7,578 | |
| रविगुप्तः (टीका) | III | CIV. 1 | 1b—208a7 | 206.11 | | | |
| ,, (वृत्तिः) | II | CVIII.3 | 137a8—266a6 | 128.14 | | 7,552 | |
| २. **प्रमाणविनिश्चयः** | I-III | XCV.11 | 250b6—329b1 | 59.3 | 1,340 | 15,734 | 17,074 |
| धर्मोत्तरः (टीका) | I;II | CIX | 1b—347a8 | 345.2 | | | |
| | III | CX. 1 | 1b—209b8 | 207.20 | | 12,463 | |
| ज्ञानश्रीभद्रः (टीका) | | CX.2 | 209b8—355a6 | 145.6 | | 3,271 | |
| ३. **न्यायविन्दुः** | I—III | XCV.12 | 329b1—337a8 | 7.14 | 177 | 2,759 | 2,936 |
| विनीतदेवः (टीका) | | CXI.1 | 1b—43b3 | 41.14 | | 1,030[१] | |
| धर्मोत्तरः ,, | | CXI.2 | 43b3—113a1 | 69.5 | | 1,477[१] | |

[१] इयं संख्या भोटभाषान्तरे समुपलभ्यते ।

| ग्रंथा:, तट्टीकाकाराश्च | परिच्छेदाः | सूतन्-ऽग्युर (मूदो) | | पृष्ठ-पंक्ति-परिमाणं | श्लोकपरिमाणं | | |
|---|---|---|---|---|---|---|---|
| | | वेष्ठनं | पृष्ठ-पंक्त्यंकाः | | मूलं | टीका | योगः |
| कमलशीलः ,, | | CXI.3 | 113a1—122b6 | 8.27 | | 221 | |
| जिनमित्रः ,, | | CXI.4 | 122b6—123b8 | .18 | | 31 | |
| ४. हेतुबिन्दुः | I—IV | XCV.13 | 337a8—357a3 | 19.11 | 444 | 4,036 | 4,480 |
| विनीतदेवः (टीका) | | CXI.5 | 123b8—223b6 | 100.13 | | 2,268 | |
| अर्चटः (विवरणं) | | CXI.6 | 223b7—302a8 | 78.9 | | 1,768 | |
| ५. संबंधपरीक्षा | | XCV.14 | 357a3—358a7 | 0.17 | 29 | 1,080 | 1,109 |
| धर्मकीर्तिः (वृत्तिः) | | XCV.15 | 358a7—364b8 | 5.23 | | 147 | |
| विनीतदेवः (टीका) | | CXII.1 | 1b—26b8 | 24.20 | | 548 | |
| शंकरानंदः ,, | | CXII.2 | 27a1—44a3 | 16.17 | | 384 | |
| ६. वादन्यायः | | XCV.16 | 364b8—400a7 | 35.7 | 798 | 3,509 | 4,307 |
| विनीतदेवः (टीका) | | CXII.3 | 44a3—71a5 | 26.16 | | 609 | |
| शान्तरक्षितः ,, | | CVIII.2 | 71a5—183a7 | 111.16 | | 2,900[1] | |
| ७. सन्तानान्तरसिद्धिः | | XCV.17 | 400a7—404b3 | 3.17 | 72 | 474 | 546 |
| विनीतदेवः (टीका) | | CVIII.1 | 1b—21b2 | 19.13 | | 474 | |
| | | | | | 4,319 | 1,32,992 | 1,37,311 |

[1] ताल-पत्रपुस्तकान्ते—"नवशताधिकं । सहस्रद्वितयं" ग्रन्थपरिमाणं प्रदत्तम् ।

# H. धर्मकीर्तिपरिवारभाजां ग्रंथकाराणां ग्रन्थपरिमाणम्

| ग्रंथकाराः | ग्रंथसंख्या | ग्रंथपरिमाणं |
|---|---|---|
| | | (श्लोकाः) |
| १. यमारिः | 1 | 26,552 |
| २. जयानन्तः | 1 | 18,148 |
| ३. शाक्यमतिः | 1 | 17,046 |
| ४. प्रज्ञाकरगुप्तः | 1 | 16,267 |
| ५. धर्मोत्तरः | 2 | 13,940 |
| ६. देवेन्द्रमतिः | 1 | 8,743 |
| **७. धर्मकीर्त्तिः** | **9** | **7,966** |
| ८. शंकरानन्दः | 2 | 7,963 |
| ९. रविगुप्तः | 1 | 7,552 |
| १०. विनीतदेवः | 5 | 4,929 |
| ११. ज्ञानश्रीभद्रः | 1 | 3,271 |
| १२. शान्तरक्षितः | 1 | 2,900 |
| १३. अर्चटः | 1 | 1,768 |
| १४. कमलशीलः | 1 | 221 |
| १५. जिनमित्रः | 1 | 31 |
| | 29 | 1,37,311 |

## I. भोटनृपाणां तुल्यकालीना भोटीय-न्याय-भाषान्तरकारा:

| | A.D. | |
|---|---|---|
| स्रोङ-ब्र्चंन्-स्गम्-पो | 630—98 | |
| मङ-स्रोङ-ब्चन् | 698—712 | |
| दुर्-स्रोङ | 712—40 | |
| खि-ल्दे-ग्.चुग्-ब्र्तन् | 740—802 | |
| खि-स्रोङ-ल्दे-ब्चन् | 802—45 | वैरोचनरक्षित:[1]<br>देवेन्द्ररक्षित:[1]<br>धर्मालोक:[2]<br>नॅम्-म्खऽ-स्क्योङ[3]<br>द्पल्-ब्र्चेग्स्[4]* |
| मुनि-ब्चन्-पो | 846—47 | |
| खि-ल्दे (स्रोङ)-ब्चन् | 847—77 | ये-शेस्-स्दे[5] (862 A.C.) |
| रल्-प-चन् | 877—901 | ,, |
| ग्लङ-दर्-म | 901—2 | |
| ऽोद्-स्रुङ्स् | 902—65 | |
| द्पल्-ऽखोर्-व-चन् | 965—83 | |
| ऽोद्-ल्दे | 1040 | ग्रग्स्-ऽब्योर्-शेस्-रब्[6]<br>द्गे-वऽि-ब्लो-ग्रोस्[7]<br>(ब्रो-सेङ-द्कर्) शाक्य-ऽोद्[7]<br>(राजकुमार:) शि-व-ऽोद्[8] |

---

[1]आचार्यशान्तरक्षित (740-840 A.C.)स्य शिष्याविमौ (Bu-ston II, P. 190)।

[2]आचार्यशान्तरक्षितस्य सहकारी भाषान्तरीकरणे (Stan. mdo. XCV. 9)।

[3]शान्तरक्षितकालीनौ (Bu-ston. II p. 191)।

[4]नागसंवत्सरे (840 A.C.) ऽनेन ग्रंथसूची व्यधायि (ibid. p. 191)।

[5]अश्वसंवत्सरे (862 A.C.) राज्ञा निर्दिष्टं किमपि। (Stan. mdo. CXXIII.44).

[6]रिन्-छेन्-ब्सङ-पो (958-1055 A.C.)-सहाय एष (Bu-ston. II. p. 214)

[7]दीपंकरश्रीज्ञान (982-1054 A.C.)-समकालीना:।

[8]अयं राजकुमार: तत्वसंग्रहभाषान्तरकारो ऽोद्-ल्दे-नृपस्य सहोदर: (Bu-ston. II.pp.213, 214)

| | | |
|---|---|---|
| चे-ल्दे | 1076 | (र्ङोग्) ब्लो-ल्दन्-शेस्-रब्[1]<br>(स्युङ्-पो) छोस्-ब्चोन्[2]<br>तिङ्-ङे-ऽजिन्-ब्सङ्-पो[3]<br>(शङ्-द्कर्)ऽफग्स्-प-शेस्-रब्[4]<br>ऽदद्-पऽि-शेस्-रब्[5] |
| द्वङ्-ल्दे | | (र्ङोग्) व्लो-ल्दन्-शेस्-रब्[1]<br>ग्रग्स्-ऽब्योर्-शेस्-रब्[6]<br>(शङ्-द्कर्)ऽफगस्-प-शेस्-रब्<br>(श्व-म.) सेङ्-र्ग्यल्[6]<br>ब्यङ्-छुब्-शेस्-रब्<br>म्छोग्-दङ्-पोऽि-र्दो-र्जे<br>द्गऽ-वऽि-र्दो-र्जे |
| ऽब्क्र-शिस्-ल्दे | 1092 | (र्ङोग्)ब्लो-ल्दन्-शेस्-रब्<br>(प-छ्व्)छुल्-ख्रिम्स्-र्ग्यल्-म्छन् |
| (स-स्क्य) ग्रग्स्-प-र्ग्यल्-म्छन् | 1147-1216 | ग्रग्स्-प-र्ग्यल्-म्छन् |
| (स-स्क्य) ऽफग्स्-प | 1251—80 | (स-स्क्य)-स्तोन्[3] ग्शोन् |
| (स-स्क्य) शर्-व-ऽजम्-द्ब्यङ्स्-दोन्-र्यन् 1288—1342 | | (द्पङ्स्)ब्लो-ग्रोस्-ब्र्तन्[4] |

[1] चे-ल्दे नृपेण 1076 A.C. वर्षे कश्मीरेषु प्रेषितोयं, द्वङ-ल्दे-ब्क्र-शिस्-ल्दे-नृपयोरपि उपस्तम्भमुपलभ्य 1092 A.C. संवत्सरं यावत् तत्रैव स्थित्वाऽनेकान् ग्रन्थाननूदितवान्। (Bu-ston. II p. 215 and J.B.A.S. 1889, S.C. Das.)

[2] चे-ल्दे-नृपेणाहूतस्य काश्मीरकस्य ज्ञानश्री(मित्र)स्य सहायोऽयं (Bu-ston. II. p. 215)

[3] चे-ल्दे-नृपेणाहूतस्य चन्द्रराहुलस्य सहायोयं (ibid. p. 215).

[4] चे-ल्दे-द्वङ-ल्दे-नृपयोः समकालीनः (ibid p. 218).

[5] (9. प-छ्व्) ञि-म-ग्रग्स् (b. 1055) सहायः कनकवर्मा (Stan. mdo, XX III. 3) अस्यापि सहायः (Stan. mdo. XCV. 3).

[6] मणिभद्ररक्षित-सहायः प्रमाणसमुच्चय-भाषान्तरीकरणे ।

[7] ऽफग्स्-प-ब्लो-ग्रोस्-ब्र्तन्-प-समकालीनोयं (Stan. mdo. XCII.3)

[8] बु-स्तोन्-पंडितः (1290-1364, इतिहासलेखनकालः 1322 A.C.) एनं स्वगुरोरपि पश्चात् स्मरति (Bu-ston, II. p. 224)

